



श्रीस्वामिनः मेट्लोत्सवे बालभजनबृन्दः

सम्पुटिः-०१ सञ्चिका-५

सप्तगिरि अनुबन्धम्

तिरुमलतिरुपतिदेवस्थानानि

# बालसप्तगिरिः

## जूलै -२०२०

## विषयसूचिका



मुखचित्रम् - श्री व्यासमहर्षि

अन्तिमरक्षापुटः - श्रीवेङ्कटेश्वरस्वामिनः



# सुदर्शनप्रभावः

- डा.एस्.नरसिंहन्

**सौदर्शनं महावेगं गोविन्दस्य प्रियायुधम्।**
**ज्वलत्पालकसङ्काशं मृत्युमृत्युं नमाम्यहम्॥**

शिष्टजनपरिपालनार्थं, दुष्टनिग्रहार्थं च भगवान् श्रीमन्नारायणः पाञ्चजन्यादि पञ्चानाम् आयुधानां प्रयोगं करोतीति वदति सिद्धान्तः। तेषु पञ्चसु आयुधेषु प्रथमस्य, भगवतः श्रीमन्नारायणस्य दक्षिणहस्ते विराजमानस्य, तदीयभक्तजनरक्षणपरस्य, चक्रराजनाम्ना प्रसिद्धस्य श्रीमहासुदर्शनस्य प्रभावः महान्, अनितरसाधारणश्च।

भगवद्विषयक ज्ञानप्रतिपादनार्थं शङ्खः उपलभ्यते चेत्, तादृशं ज्ञानमार्गं सम्यक् दर्शयित्वा आचार्यस्थानं निर्वहन्, भक्तजनाभीष्टानि पूरयन्, तान् विष्णुप्रियान् भक्तजनान् अधिव्याधिभिः संरक्ष्य, संसारसागरात् तारयित्वा सुदर्शनस्वामी महदुपकरोति। यदा काञ्चीनगरवासिनः, तत्समीपग्रामवासिनश्च एकदा विशेषज्वरपीडीताः सन्तः बाधामनुभवन्ति स्म, तदा सर्वतन्त्रस्वतन्त्र इति ख्यातेन रामानुजसम्प्रदायप्रवर्तकेन आचार्यपुरुषेन श्रीनिगमान्तमहादेशिकेन **सुदर्शनाष्टकम्** इति स्तोत्रं विरचितमासीत् लोकरक्षणार्थम्। तत्र एवं प्रतिपादयन्ति सुदर्शनस्वामिनः ख्यातिं विशेषतया-

''जनिभयस्थान तारण - निगम सद्धर्मदर्शन - विबुधसङ्कल्पकल्पक''
इति। अस्य स्तोत्रस्य पारायणेन ते सर्वे रोगविमुक्तिं प्राप्तवन्तः इत्यस्ति क्षेत्रमाहात्म्यम्। परं सर्वैः भक्तजनैः इदानीमपि कामितफलप्राप्तये दिनचर्यारूपेण पारायणं क्रियते इत्येव सुदर्शनाष्टकस्तोत्रस्य विशेषः। एवमेव **सुदर्शनशतकम्** इति स्तोत्रविशेषं विरच्य कूरनारायणजीयर् स्वामिनः लोकार्पणमकुर्वन्।

हेतिराजः, चक्रराजः, श्रीसुदर्शनः इत्याद्यनेकैः नामभिः स्तूयमानः अयं महापुरुषः श्रीवैष्णवदेवालयेषु स्वामिसन्निधौ वा, पृथक्स्थाने वा



उत नृसिंहस्वामिना सह वा तत्स्थानमलङ्कुर्वन् भक्तजनसंरक्षणपरायणः आराध्यते सर्वैः अयं महापुरुषः। अर्चावतारप्राशस्त्यं यावत् प्रबलमस्ति श्रीमन्नारायणस्य, तावदस्ति तदीयभक्तविशेषस्य सुदर्शनस्यापि देवालयेषु। द्रविडदेशे कुम्भद्योणनामके पुण्यक्षेत्रे चक्रपाणिः इति नाम्ना अर्चावतारे विराजमानः श्रीमन्नारायणः सुदर्शनस्वामिनः प्रभावं स्वयं व्यनक्ति लोकाय।

कार्यजयार्थं, ब्राह्य-आन्तरिकशत्रुनाशार्थं, अधिव्यधिनिवारणार्थं, भगवद्विषयकज्ञानदृढीकरणार्थं, आपन्निवारणार्थमिति अनेकप्रकारैः श्रीमन्नारायणकैङ्कर्यमाचरति सुदर्शनस्वामी लोके भक्तजनेभ्यः। भगवान् श्रीमन्नारायणः पञ्चभिः आयुधैः लोकं रक्षति। परं सुदर्शनस्वामी तदुपरि गत्वा षोडशभिः आयुधैः भक्तजनरक्षणतत्परः भवति इति पुनः आचार्यसार्वभौमः निगमान्तमहादेशिकः **षोडशायुधस्तोत्रं** विरच्य महासुदर्शनस्य माहात्म्यं विश्वप्रसिद्धमकारयदिति विशेषः।

भगवान् श्रीमन्नारायणः आत्मनः कृतं वा अपराधं सहते, न तदीयभागवतापचारमिति सर्वे महान्तः पौराणिककथाभिः निरूपयन्ति। भगवता नारायणेन मकरग्रस्तस्य स्वभक्तस्य गजेन्द्रस्य संरक्षणवेलायां, नरकासुरवधार्थं, दुर्वासेन प्रबाधितस्य भागवतोत्तमस्य अम्बरीषमहाराजस्य संरक्षणकाले, शिशुपालस्य संहारसमये, पौण्ड्रकवासुदेवस्य संहारविषये, महाभारतयुद्धे अभिमन्युवधकारणभूतस्य जयद्रथस्य मारणतत्परस्य, तदसम्भवमिति मत्वा स्वप्रतिज्ञानुगुणं अग्नौ स्वशरीरत्यागनिश्चितस्य आत्मनः अत्यन्तप्रियभूतस्य अर्जुनस्य प्राणसंरक्षणसमये, अनिरुद्ध-उषादम्पत्योः विवाहप्रतिबन्धकभूतस्य बाणासुरस्य वधविषये, दुष्टाचारमग्नस्य स्वमित्रस्य मालिकस्य वधविषये च सुदर्शनस्वामिनः प्रयोगं कृत्वैव भक्तरक्षणं, धर्मसंस्थापनञ्च कृतमिति विशेषः।

एतादृशविशेषविशिष्टस्य अस्मत् सुदर्शनस्वामिनः ख्यातिं विस्तरेण प्रतिपादयति अहिर्बुध्न्यासंहिता नामकः पाञ्चरात्रागमग्रन्थः। ग्रन्थेऽस्मिन् तदीयाराधनक्रमः, विधिः, यन्त्रप्रतिष्ठा, मूलमन्त्रजप, होमविधयः इत्याद्यनेके आगमसम्बन्धिविषयाः विस्तारेण प्रतिपादिताः सन्ति। एतादृशविशेषविशिष्टस्य सुदर्शनस्वामिनः अनुग्रहेण सर्वे रोगविमुक्ताः, सुख-सौख्य-धन-धान्यादिसमृद्ध्या चिरं जीवन्तु इति प्रार्थयामहे।



द्वादश सूरयः



# नम्माळ्वार् चरितम्

- जी. रघुरामण्

द्वादश महायोगिषु (आळ्वार्) अन्यतमः नम्माळ्वार्। सः विष्णुभक्तः। अस्माभिः प्राप्तः ४००० दिव्यप्रबन्धेषु अस्य भागः १३५२ भवति। ये ये स्थलाः दिव्यप्रबन्धेषु प्रदर्शिताः सूचिताः च ते एव दिव्यदेशाः इति वदन्ति।

नम्माळ्वार् तावत् द्वादश महयोगिषु पञ्चमः भवति। स तु अस्माकम् श्री वैष्णव संप्रदायप्रवर्तकः आसीत्। स आळ्वार्तिरुनगरी इति दिव्यदेशे जनीम् अवाप। जन्म समये अस्माकं षट् इति वायुसंसर्गेन अस्माकं पूर्वज्ञानम् नश्यते। यथा नम्माळ्वार् महोदयस्य जन्म आसीत् तथा सः षट् वायुं पादेन ताडितवान्। तस्मादेव नम्माळ्वार् महोदयस्य षठरिपु इति नाम प्रसिद्धमासीत्।

अस्य कृतिः चतुर्धा विभक्तुं शक्यते।

**तिरुवाय्मोळि**
**तिरुवीरुत्तम्**
**तिरुवासिरियम्**
**पेरियतिरुमोळि**

अनेन कृत कृतिषु प्राधान्यतया वैष्णवत्वम् सिद्धा भवति। अयं च कविः विश्वक्शेनस्य अंशः इति सुप्रसिद्धः।

अस्य जीवनस्य वैशिष्ट्यं अग्रे प्रदर्शयति। प्रायः सर्वे शिशवः जन्मसमये रुदन्ति। किन्तु नम्माळवार् नैव रुदितवान्। अत्र समीपस्य तिन्त्रिणी वृक्षस्य मूले षोडशवर्षान् भवगवन्तं ध्यात्वा तत्रैव उपविष्टवान्। तदनन्तरम् षोडशवर्षान् भगवद्विषयं उपपादनम् कृतवान्।

एवं च अनेन प्रोक्तानि दिव्यप्रबन्धानि इदीनीमपि बहुभिः श्रूयते स्थूयते च कालवशात् अस्य दिव्यप्रबन्धस्य श्रवणम् ४००० वर्षादनन्तरम् नाथमुनिः इति महायोगि जनीम् प्राप्तवान्। सः काट्टुमण्णार् देवालये भगवन्तं दृष्टुं गतवान्। तत्र आलयस्य जनाः श्री शटगोपेन कृतानि दशदिव्यप्रबन्धानि श्रुतवान् तथा तस्मिन् दिव्यप्रबन्ध अन्तिमे सूचितम् यत् शटगोपेन कृतषु सस्त्रेषु दिव्यप्रबन्देशु एतत् दशदिव्यप्रबन्दं इति वाक्येन अवगतवान् यत् शटगोपेन सहस्र दिव्यप्रबन्दानि कृतानि इति।

तदनन्तरम् नाथमुनिः शटगोपस्य जन्मस्थानम् प्राप्तवान्। तत्र विध्यमान मधुरकवियाळवार् पौत्र प्रपौत्रेभ्यः **कण्णिनुण्सिरुत्ताम्भु** इति प्रबन्देन अधीतवान्। तत् प्रबन्दम्, नम्माळवार् यस्मिन् तिन्त्रिणी वृक्षस्य उपविश्य भगवतः ध्यानम् तस्मिन्नेव तिन्त्रिणी वृक्षस्य मूले उपविश्य नाथमुनि भगवन्तम् नम्मालवार् महोदयम् १२००० वारं कण्णिनुण्सिरुत्ताम्बु उच्चार्य धयानम् कृतवान्। यस्य नम्माळवार् नाथमुनेः कटाक्षम् दत्तवान् नाथमुनिना प्रार्थना पूर्वकम् नम्माळवार् ४००० दिव्यप्रबन्धानि बोधितवान्। अनेन ज्ञायते यत् अस्माकं इदानीं उपलभ्यमान दिव्यप्रबन्धानि नाथमुनिद्वारा नम्माळवार् महोदयेभ्यः प्राप्तानि। अतः नम्माळवार् महोदयः गौरव अर्हः भवति। तमेव वयं नित्यं प्रणमामः।





कन्नड हरिदास वरेण्याः

# हरिदासाः श्रीमद्राघवेन्द्रतीर्थाः

विद्वान् वि. प्रदीप कुमारः

"इन्दु एनगे गोविन्द निलय पादारविन्दव तोरो मुकुन्दने" इति भैरवीरागस्थं गीतं अप्रस्तुताः संगीतविद्वांसः तथा अश्रुताः जनाः अपि नोपलभ्यन्ते। भक्तिरसप्रबोधात्मके सुन्दरतमेऽस्मिन् गीते प्रतिपदमपि मनसः आर्द्रतोत्पादकमिव, हरिदाससाहित्यस्य मुक्तावलीव विलसतीदं गीतम्। अस्य गीतस्य रचनाकाराः जगद्गुरुश्रीमद्राघवेन्द्रतीर्थाः। मंत्रालयक्षेत्रे बृन्दावने विराजमानाः इमे श्रीराघवेन्द्रतीर्थाः आश्रितभक्तजनानां कल्पवृक्ष कामधेनु सदृशाः। तमिळनाडुराज्ये कुम्भघोणवास्तव्याः वीणाकृष्णभट्टाः - एते श्रीकृष्णदेवरायस्य वीणावादनमुपदिश्य गुरुदक्षिणारूपेण मुक्ताहारादिकं प्राप्तवन्तः। एषां प्रपौत्राः वीणातिम्मण्णभट्टाः। तिम्मण्णभट्टः



गोपिका पुत्रः श्रीराघवेन्द्रतीर्थाः। तिरुपति वेङ्कटनायकस्य अनुग्रहेण जनितानं राघवेन्द्रतीर्थानां "वेङ्कटनाथः" इति पूर्वाश्रमे नामकरणं कृतवन्तः। वेङ्कटनाथस्य बाल्ये एव पितृपादानां स्वर्गारोहणेन सः मातुलानां श्री लक्ष्मीनरसिंहाचार्याणां सविधे स्थित्वा काव्य-नाटकादीनधीतवन्तः।





अनन्तरं जगत्पसि सिद्धानां श्रीमद्विजयीन्द्तीर्थानां करकमलजानां श्रीसुधीन्द्रतीर्थानां सन्निधौ द्वैतवेदान्त व्याकरणादि शास्त्रानधीत्य अनतिकाले एव असदृशपाण्डित्थं प्राप्य प्रतिवादिमतानुसारमेव तान् पराजितवन्तः। वेङ्कटनाथस्य पाण्डित्यं गुरुभक्तिं दैवभक्तिं धार्मिकतां आचारशीलतां च विलोक्य गुरवः श्रीसुधीन्द्रतीर्थाः तं श्रीमन्मध्वाचार्याणां मूलमहासंथास्यनस्य पीठाधीशं कर्तुं चिन्तयान्ति। परन्तु वेङ्कटनाथस्य ''सरस्वतीं इति भार्या 'लक्ष्मीनारायणः' इति पुत्रश्च आस्तामिति सः सन्यासे विमुखो भवति। स्वप्ने वाग्देव्यदेशानुसारं भार्यां पुत्रं च ज्येष्ठस्य गृहे संन्मज्य तञ्जावूरु ''रघुनाथ'' नायकस्य समक्षे पट्टाभिषिक्ताः भवन्ति। स च महोत्सवः देवेन्द्रस्य पट्टाभिषेकः इव प्राचलन्। तदा श्रीसुधीन्द्रतीर्थाः वेङ्कटनाथस्य ''राघवेन्द्र'' इति नामकरणं कृतवन्तः। तदनु जगाति श्रीमद्राघवेन्द्रतीर्थाः इति प्रख्याताः। श्रीराघवेन्द्रतीर्थाः अनेकग्रन्थान् रचितवन्तः तेषु ''परिमळ ग्रन्थस्य विशिष्टं स्थानमास्ति। तेन श्रीराघवेन्द्रतीर्थाः ''परिमळाचार्याः' इति बिरुदाङ्कितने प्रख्याताः। एतेषां उपनिषत् खण्डार्थस्य साहाय्येनैव अद्यतन विद्यापीठेष्वपि पाठनं प्रचलति। एभिः रचितेषु ''प्रातः सङ्कल्पगद्यम्'' इत्येतम् अत्युन्नतपारायणग्रन्थः इति प्रथितः। श्रीराघवेन्द्रतीर्थाः स्वजीवने बहुप्रकारेण भक्तजनाननुगृहीनवन्तः। आम्रफलेन निर्मितस्य पायसस्य भाण्डे पतनेन बालकः मरणं प्राप्नोति। तं कमण्डलोदकेन पुनरञ्जीवितवन्तः। आदोनि राज्ञा समर्पितं मांश्नं फलरूपेण परिणस्य प्रदर्शितवन्तः। अग्नौ रत्नहारं निधाय विकाररराहित्येन तत् पुनः प्रदर्शितवन्तः। महाराजानः गौरवसमर्पणार्थं स्वर्णाभिषेकादिकं कृतवन्तः। एतादृशाः इमे श्रीमद्राघवेन्द्रतीर्थाः बृन्दावनस्याः सन्तः अद्यापि भक्तजनान् परिरक्षयान्ति।



चित्रकथा



# श्री वेङ्कटेश्वरस्य मातुलः


तेलुगु मूलम्
श्रीनिवासादीक्षितुलु

संस्कृतानुवादः- प्रियंवदा राघवन्
चित्रम्- पि.शिवप्रसाद्


श्रीवेङ्कटाचले वेङ्कटेश्वरस्य पुष्पकैङ्कर्याय अनन्ताल्वार् नन्दनवनम् अद्भुतरूपेण वर्धयति। सः विकसित पुष्पैः पुष्पमालां गुम्फित्वा देवाय प्रतिदिनं समर्पणं तस्य नित्य कैङ्कर्यम्।

एकदा...




अनन्तर रात्रौ चौरान् बन्धयितुम् आळ्वार् एकस्मिन् कोणे रहस्य रूपेण उपविष्टवान्। तदा एकः नवदम्पतिः तत्र विलासेन आगच्छत्।




तौ द्वौ उल्लासेन उद्याने पुष्पाणि गृहीत्वा तेषां सुगन्धम् आस्वाद्य उद्यानं सम्पूर्णम् अटन्तौ स्तः।




तौ दृष्ट्वा अळ्वार् बहु कृद्धः जातः।
अहम् अवश्यं तौ सम्यक् एकंपाठं पाठयामि।
हे! भवन्तौ कौ? उद्यानं सम्पूर्णं किमर्थं नाशयतः।


हे लक्ष्मीः उद्यानस्य रक्षकः दण्डेन अत्रैव आगच्छति पलायतु पलायतु......।
तथैव स्वामिन्!


धावन्तौ तौ आल्वार् बन्धति। परन्तु स्वामी पलायितवान्, लक्ष्मीं तु आल्वार् बन्धितवान्।
हे! तूष्णीं तिष्ठ! मम वस्त्रेण भवतीं अस्मिन् वृक्षे बध्नामि भवत्याः पतिः आगत्य रक्षां करिष्यति।
अहं भवतः पुत्री इति मत्वा मां त्यजतु। पुनः अत्र न आगमिष्यामि।




सुप्रभात सेवाय अर्चकाः ये आलयं प्रति आगतवन्तः तैः श्रीवेङ्कटेश्वर देवस्य हृदये महालक्ष्मी न दृष्टा। ते आश्चर्येन स्थिवन्तः। अनन्ताल्वारस्य उद्याने लक्ष्मीदेवी बद्धा अस्ति। भवन्तः सर्वे मृदङ्गादि वाद्यान् स्वीकृत्य तत्र गच्छन्तु इति वेङ्कटेश्वर स्वामी आदेशयति। तदा अल्वारः...









आळ्वारः
पुष्पगुच्छात्
अकस्मात् लक्ष्मीः
अदृश्या जाता।
श्रीवेङ्कटेश्वरस्य
वक्षस्थले सा पुनः
दर्शनं दत्तवति

हे अनन्त! अद्य भवान्
कन्यादानं कृत्वा मम
मातुलः सञ्जातः।

शरणं
शरणं
जननी

श्रीवेङ्कटेश! मम
एतावत् भाग्यं वा।
हे करुणामया!

आगामि सञ्चिकायां
श्रीवेङ्कटेश्वरस्वामिनः अपरदिव्यलीलानाम् आनन्दम् अनुभवेम। स्वस्ति।

# स्वभावो दुरतिक्रमः

- डा.कनपाल कुमारः



एकस्मिन् वने एकः श्रुगालः निवसति। एकदा सः एकं नगरं गच्छति। तत्र एकस्य रजकस्य गृहम् अस्ति। तस्य गृहस्य अङ्गणे बहूनि भाण्डानि सन्ति। तेषु भाण्डेषु विविधाः वर्णाः सन्ति। श्रृगालः सहसा एव नीलवर्णस्य भाण्डे पतति। भाण्डात् बहिः आगन्तुं सः बहु प्रयत्नं करोति। किन्तु उत्थातुम् असमर्थः सः मृतः इव नाटकं करोति। तदा रजकः तं दूरे नीत्वा क्षिपति। ततः सः श्रृगालः वनं गच्छति। तस्मिन् वने एकस्मिन् तटाके स्वरूपं पश्यति। सः सम्पूर्णतया नीलवर्णः जातः अस्ति। तदा धूर्तः सः किञ्चित् चिन्तयति। सर्वान् श्रृगालान् आह्वयति

वदति च - ''अस्य वनस्य देवता मह्यं नीलवर्णं दत्तवती, स्वहस्तेन मम राज्याभिषेकं कृतवती। अहम् इदानीम् अस्य वनस्य नृपः अस्मि। अतः अद्यारभ्य मम आज्ञां पालयन्तु'' इति।

श्रृगालाः तस्य विशिष्टं वर्णं पश्यन्ति तस्मिन् विश्वासं च कुर्वन्ति। यथा ''आज्ञापयति देवः'' इति वदन्ति। एवं प्रकारेण वने सर्वे तस्य आज्ञापालनं कुर्वन्ति। व्याघ्राः, सिंहाः, गजाः इत्यादयः उत्तमाः मृगाः अपि तेन सह भवन्ति। अनेन गर्वयुक्तः सः स्वबान्धवान् दूरीकरोति। अतः सर्वे श्रृगालाः दुःखिताः भवन्ति। तदा एकः वृद्धः श्रृगालः सर्वान् श्रृगालान् वदति - ''दुःखं मास्तु'। अहम् अस्य उपायं चिन्तयामि। सर्वे व्याघ्रादयः एतस्य नीलवर्णकारणात् 'एषः श्रृगालः इति न जानन्ति। एषः वनस्य नृपः इति एव चिन्तयन्ति। वयं एतस्य निजस्वरूपं सर्वान् दर्शयामः'' इति।

तदनन्दरं सर्वे श्रृगालाः एकदा सन्ध्यासमये यत्र नीलवर्णः श्रृगालः व्याघ्रादिभिः सह उपविष्टः तत्र आगच्छन्ति उच्चैः शब्दं च कुर्वन्ति। तं शब्दं श्रृगालः श्रृणोति जातिस्वभावकारणाच्च सः अपि उच्चैः शब्दं करोति। सर्वे व्याघ्रादयः तस्य निजरूपं ज्ञात्वा एषः वञ्चकः इति तं मारयन्ति। अतः एव वदन्ति -

**यः स्वभावो हि यस्यास्ति स नित्यं दुरतिक्रमः।**
**श्वा यदि क्रियते राजा स किं नाश्नात्थपानहम् ।। इति।।**

अस्यार्थः - यस्य कस्यापि स्वभावं यः कोऽपि परिवर्तयितुं न शक्नोति। शुनकः यद्यपि नृपः भवति तथापि सः पादरक्षां जिघ्रति एव।





# विशिष्ट बालिका

| | |
|---|---|
| नाम | : ऐ. अनघा |
| कक्ष्या | : नवमी कक्ष्या |
| जन्मदिनम् | : ११-५-२००७ |
| पाठशाल | : महिलालयम् स्कूल् अलुव, केरळ |
| मातुः नाम | : वि.सुधा |
| पितुः नाम | : वि.अरुण् कुमार् |
| नैपुण्यम् | : शास्त्रीय सङ्गीतम्, वयोलिन् तथा शास्त्रीय नृत्यम् (भरतनाट्यम् मोहिनिअट्टम्, कूचुपूडि) |

भारतीय शास्त्रीय नाट्ये तथा सङ्गीते निष्णाता भवितुं एवमेव भारतीय कलाः संस्कृतिं च प्रचारं कर्तुं उद्युक्ता

**शास्त्रीय सङ्गीतम्** - अनघा बाल्ये एव (३) शास्त्रीय सङ्गीताभ्यासं कर्तुं मारब्धा, रङ्गस्थले समूहे शास्त्रीयसङ्गीत प्रदर्शनाः दत्तवती, उपाध्यायिन्योः श्रीमति श्यामा हरिदास, अलुवा पर्यवेक्षणे।। सा निश्चयेन स्वीकुर्वन्ती प्रथम बहुमतिं कान्ति सङ्गीते, शास्त्रीयसङ्गीते, तथा माधुर्य कीर्तनासु पाठशाला दशायाम्। सा सि.बि.एस्.इ महिलायां स्कूल् अलुवा प्रतिनिधित्वेन जिल्लास्थायि युवजनोत्सवेषु भागं स्वीकृतवती।

**शास्त्रीय वाद्यम्** - अनघा वयोलिन् वाद्यपरिकरे अभ्यासमकरोत् श्रीमति गीता परमेश्वरन् पर्यवेक्षणे।

**शास्त्रीयनृत्यम्** - सा शास्त्रीयनृत्यं भरतनाट्यं अभ्यासं करोति, तथा मोहिनीयाट्टम् एवं कूचिपूडि, श्रीमति सुधा पीताम्बरम् आफ् श्री शङ्करा स्कूल् आफ डान्स्, कालडि। अध्यापिकायाः पर्यवेक्षणे। सा गत पञ्च वर्षेभ्यः नाट्याभ्यासं करोति चतस्रः दशाः परिसमाप्य योग्यता पत्रं लब्धवती। अधीत पाठशालायां परीक्षाः प्रचलिताः। तस्याः (अरंगेट्रम्) भागस्वीकारः २०१७ वत्सरे अंतर्जातीय नाट्योत्सवेः कालडि तदारभ्य सा पाठशाला द्वारा विविध दशासु प्रदर्शनं करोति। उदाहरणम् चोट्टानिकर भगवति देवालयः २०१८, कोल्लूरु मूकाम्बिका देवालयाः नवरात्रि उत्सवेषु, गरुवायूरु श्रीकृष्ण देवालयः २०१८ वत्सरे, कालडि श्रीकृष्ण देवालयः तथा पल्लिपट्टुकव्देवि आलयः अलुव संवत्सरोत्सवेषु।

# क्विज्

- एन्. उमादेवी

१. गायत्रीमन्त्रस्य उपास्य देवता नाम किम्?

अ. उषा
आ. विष्णुः
इ. सविता
ई. अग्निः

२. कल्पसूत्रं कतिविधम् वर्तते?

अ. द्विविधम्
आ.त्रिविधम्
इ. चतुर्विधम्
ई. पंचविधम्

३. उरुक्रमः कः?

अ. विष्णुः आ. इन्द्रः इ. रुद्रः ई. अश्विनौ

४. यजुर्वेदस्य कति शाखाः वर्तन्ते?

अ. २१
आ. ८५
इ. १०११
ई. १००

५. श्रीमद्भागवत महापुराणे कपिलः कस्यावतारः?

अ. ब्रह्मणः
आ. शिवस्य
इ. धर्मस्य
ई. विष्णोः

६. देवता शब्दः कस्मिन् लिंगे प्रयुज्यते?

अ. पुल्लिंगे
आ. नपुंसकलिंगे
इ. उभयलिंगे
ई. स्त्रीलिंगे

७.कति वेदाङ्गानि सन्ति?

अ.षट्
आ.चत्वारि
इ. अष्ट
ई. दश

उत्तराणि: १. इ २. इ ३. अ ४. ई ५. ई ६. ई ७. अ

# चित्रलेखनम्

अस्य चित्रपटस्य रञ्जितं कुर्मः वा?



उपरि चित्रपटस्य अधो निर्दिष्ट प्रदेशे स्थापयामेव।







श्रीस्वामिनः मेट्लोत्सवे बालबालिकाः



SAPTHAGIRI (SANSKRIT) ILLUSTRATED MONTHLY
Published by Tirumala Tirupati Devasthanams
printing on 30-07-2020.

नित्याय निरवद्याय सत्यानंद चिदात्मने ।
सर्वांतरात्मने श्रीमद्वेंकटेशाय मङ्गलम् ।।